# वैराग्यमन्दाकिनी





रचयिता

श्रीमङ्गलार्णव ( प्रसिद्ध काशिकानन्द ) यतिः

श्रीजयमङ्गलार्णव (काशिकानन्द) यतिः



अवलोकितशास्त्राम्बुधि--गम्भीरतलोऽपिजलधिगम्भीरः ।
प्रमितगुणाधिष्ठानोऽप्यमितगुणो जयति मङ्गलार्णयतिः ॥

# स्वागत

पू. स्वामिजी श्रीकाशिकानन्दजी महाराज विरचित वैराग्यमन्दाकिनी का स्वागत करता हुआ मैं अवर्णनीय आनन्द का अनुभव करता हूँ और अपने को अत्यन्त धन्य समझता हूँ।

अपनी विद्वत्तापूर्ण भूमिका में स्वामिजी ने वैराग्यमन्दाकिनी की आवश्यकता एवं उपादेयता अच्छे ढंगसे बताई है। भूमिका संस्कृत में होने के कारण संस्कृत से अनभिज्ञ लोगों को इसमें वैराग्य का प्रतिपादन कैसे किया गया है यह बतलाने के लिये प्रारम्भ में उसी का सारांश यहां दे रहा हूँ।

"मानवजीवन का परमपुरुषार्थ मोक्ष है ऐसा प्रतिपादन करनेवाले वेद साथ ही साथ संसार की असारता और अनुपादेयता भी सिद्ध करते हैं। भिन्न भिन्न दर्शनों के रचयिता ऋषि-मुनियों ने भी संसार को अश्रेयस्कर बताया है। संसार की हरेक चीज दुःखमय है अतः इसका त्याग करना चाहिये ऐसा सिद्धान्त योगदर्शनने भी प्रस्तुत किया है। तथापि संसार की हरेक चीज का त्याग करने में कोई समर्थ नहीं होता है। हां, संसार की समस्त वस्तुओं से राग हटा देना शक्य है। अतः इस राग-त्याग को ही संसारत्याग मान लिया जाय तो मनुष्यजीवन का परमपुरुषार्थ वैराग्य ही है ऐसा अर्थ अपने आप निकलता है।

इस वैराग्य की चार भूमिकाएँ शास्त्र में बतलाई गई हैं। (१) यतमानसंज्ञा (२) व्यतिरेकसंज्ञा (३) एकेन्द्रिय और (४) वशीकारसंज्ञा.

(१) यतमानसंज्ञा :—संसार की स्थूल और सूक्ष्म, हरेक वस्तु में मनुष्य का राग रहता है। किन्तु विवेकबुद्धि से 'संसार असार है' 'संसार दुःखमय है' इस प्रकार का चिन्तन करके रागको हटाने के लिये इस अवस्था में प्रयत्न किया जाता है। संसार के असारत्वादि का निरन्तर चिन्तन करने का यहां प्रयत्न होने से इस अवस्था को यतमानसंज्ञा कहते हैं।

(२) व्यतिरेकसंज्ञा :—सतत उक्तप्रकार की चिन्तनपरम्परा से पुत्र, मित्र, कलत्र, इत्यादि स्थूल विषयों से रागकी निवृत्ति होती है। किन्तु शब्दादि सूक्ष्म विषयों में वह रहता है। इस

प्रकार स्थूल कषाय पक्व होते हैं और सूक्ष्म कषाय अपक्व ही रह जाते हैं। अब इन अपक्व कषायों का पक्व न होने का कारण सूक्ष्म-बुद्धि से ढूँढ़ कर उसको पकाने के लिये और भी उपायों का अवलम्बन करने की अवस्था की व्यतिरेकसंज्ञा है। यह संज्ञा देने का कारण यह है कि इस में स्थूल पक्वकषायों से सूक्ष्म अपक्व कषायों का व्यतिरेक ( अलगाव ) होता है।

( ३ ) एकेन्द्रियसंज्ञा :— स्थूल और सूक्ष्म दोनों प्रकार की वस्तुओं से राग दूर हो जाता है किन्तु उस राग का संस्कार मनके ऊपर अवश्य रहता ही है, क्यों कि यह रागसंस्कार इतनी आसानी से नहीं मिट पाता। प्रत्युत समय आने पर यह रागसंस्कार कोई अन्य इष्ट वस्तुओं पर फिर भी प्रसृत होकर मन को मोहित कर सकता है। राजर्षि भरत इसके उदाहरण है। उन्होंने स्थूल और सूक्ष्म विषयों से राग हटा दिया था। फिर भी उसका संस्कार प्रसृत होकर एक मृगपोतक पर चिपक गया। और तीसरी अवस्था से वे च्युत हो गये ( हां, तो भी अपने प्रयत्नों से वह तृतीय जन्म में सफल हो गये यह भूलना नहीं चाहिये। ) इस प्रकार स्थूल और सूक्ष्म वस्तुओं का राग नष्ट होने पर भी राग का संस्कारमात्र जब मनरूपी एक इन्द्रिय में रहता है उस अवस्था को एकेन्द्रियसंज्ञा कहा गया है।

( ४ ) वशीकारसंज्ञा :—जब दृष्ट और श्रुत, स्थूल और सूक्ष्म सभी विषयों से तृष्णा दूर हो जाय, तथा राग के समस्त संस्कार भी ऐसे नष्ट हो जाँय कि उनका फिर प्रसरण हो ही नहीं; ऐसी स्थिति को वशीकारसंज्ञा कहते हैं। उसके दो प्रकार हैं: ( क ) अपरा और ( ख ) परा.

( क ) अपरा :—इस अवस्था में विषयराग नहीं रहता, किन्तु विषयसंस्कार अवश्य रहते हैं। इस रागसंस्कार का फिर प्रसरण होने की शक्यता न होने पर भी इसकी उपस्थिति तो रहती है। इस लिये इसको अपरा वशीकारसंज्ञा कहा है।

( ख ) परा:—आगे निर्विचारवैशारद्य से अध्यात्मप्रसाद-स्वरूपिणी प्रज्ञा उत्पन्न होती है। इसके बाद ऋतंभर प्रज्ञा उत्पन्न होती है। इस अध्यात्मप्रसादस्वरूपिणी प्रज्ञा से किंवा तत्प-

आह्लाविनी ऋतम्भरप्रज्ञा से उत्पन्न होनेवाले संस्कारों से जब अन्य संस्कारों का प्रतिबन्ध होता है; याने कि सभी रागसंस्कारों की उपस्थिति भी नहीं रहती तब सर्वबन्धन नष्ट होकर परम वैराग्य उत्पन्न होता है।

[ सारांश यह हुआ की प्रथम अवस्था में असारत्वादि चिन्तन का यत्नमात्र होता है; दूसरी में स्थूल वस्तु में राग का त्याग, तीसरी में सूक्ष्म वस्तु में राग का त्याग और चतुर्थ में रागसंस्कार का भी नाश होकर परम वैराग्य सिद्ध होता है। ] यही वैराग्य कैवल्य लक्षण मोक्ष की प्राप्ति का परम कारण है। इसीको ही परा वशीकारसंज्ञा कहा है। इस प्रकार का वैराग्य भक्ति में भी सहायक है। " न पारमेष्ठ्यं न महेन्द्रधिष्ण्यम् " इत्यादि श्रीमद्भागवत के श्लोक में बताया है कि ' भक्त न तो इन्द्रासन की इच्छा करता है न तो पारमेष्ठ्य की कामना रखता है '। इससे सिद्ध होता है कि वैराग्य के विना पराभक्ति का भी उदय नहीं होता है।

इस वैराग्यमन्दाकिनी के लहरीसंज्ञक तीन विभागों में उपर्युक्त चतुर्विध वैराग्य का प्रतिपादन करने के लिये ' अष्टक ' ' दशक ' इत्यादिरूपों से अर्थ का विवेचन किया है।

पहले वैराग्य विषय का उपक्रम (श्लो. १–५) करके जगत की अनिर्वचनीयता ( ६–१३ ) और असारता ( १४–२१ ) दिखला कर जन्मफलदशक (२२–३१) से परमात्मप्राप्ति के उपाय का अवलम्बन करना चाहिये यह बताया। बाद प्रथम लहरी के अन्ततक भोग (३२–३९) धन (४०–५२) यश (५३–६१) इत्यादि की दुःखरूपता दिखलाकर सांसारिक वस्तुओं की परिहेयता प्रतिपादित की गई है।

आन्तरिक भावों का उपपादन जिसमें प्रधान है ऐसी द्वितीय लहरी में मोह आदि की हेयता और विवेक आदि की उपादेयता दिखाई गई है।

तृतीय लहरी में वैराग्य उद्भावन करने में उपयुक्त सच्चे उदाहरण आदि से फल का प्रतिपादन किया गया है। "

इस वैराग्यमन्दाकिनी काव्य में काव्यगुणों की कोई कमी नहीं है। सर्व प्रथम अनुप्रासादि शब्दालंकार से विभूषित सुललित पदावली श्रोताओं के कर्ण को आह्लादित करती है। साथ साथ

प्रसाद और माधुर्य गुण से भी यह अलंकृत है। प्रायशः सभी श्लोकों का अर्थ इसको पढ़ने से, बिना कष्ट ही, प्रतीत होता है। स्वामिजी की विद्वत्ता और दार्शनिकता भी इस में काफी दिखाई देती है। और " ग्रन्थग्रन्थिरिह क्वचित्कचिदपि न्यासि प्रयत्नान्मया " इस श्रीहर्ष की उक्त्यनुसार स्वामिजी ने भी कहीं कहीं ' ग्रन्थग्रन्थि ' का निर्माण किया है। उदाहरणार्थ अन्तिम श्लोक को पढ़िये। भर्तृहरि के वैराग्यशतक जैसा यह काव्य संस्कृत-साहित्य में अवश्य अपना स्थान लेकर रहेगा। अर्वाचीन संस्कृतसाहित्य के क्षेत्र में स्वामिजी का यह प्रदान अत्यन्त स्वागतार्ह है, और इस लिये स्वामिजी का उपकार मानना चाहिये।

इस काव्यने अपना प्रभाव तो प्रकाशित होने से पहले ही दिखा दिया है। स्वामिजी के मुखारविन्द से प्रसंगवशात् इस काव्य के श्लोक सुनते सुनते एक सद्गृहस्थ ने जब " उत्तुङ्गीकुरुते शिरोऽरुणयते नेत्रे...(पृ. २२ श्लो. ४५) इत्यादि श्लोक सुना, तब वे इतने प्रभावित हुए कि उन्होंने पुस्तक के प्रकाशन के लिये द्रव्य की सहायता दी, इतना ही नहीं बल्कि ' यशोष्टक ' (पृ. २६-३२) में प्रतिपादित अर्थको सार्थक करते हुए स्वामीजी से प्रार्थना की कि द्रव्य सहायता के बारे में उनका नामनिर्देश भी न किया जाय। इसी तरह यह ग्रन्थ संसारीओं को मार्गदर्शन कराता रहे ऐसी परमात्मा से मेरी प्रार्थना है।

सांसारिक दुःखों से परितप्त मानवों के त्रिविध तापको दूर करनेवाली परमपावनी मन्दाकिनी की तरह संसारीओं का उद्धार करनेवाली इस वैराग्यमन्दाकिनी का मैं सभी संसारीओं की ओर से स्वागत करता हूँ और अभिलाषा करता हूँ कि,

" विजयतां वैराग्यमन्दाकिनी "

डॉ. अरुणोदय नटवरलाल जानी
एम. ए.; पीएच. डी.; काव्यतीर्थ.
संस्कृत के प्राध्यापक,
आर्ट्स फॅकल्टी,
म. स. युनिवर्सिटी, बड़ौदा.

# किञ्चिद्वक्तव्यम् ।

नमः समस्तभूतानां हेतवे वृषकेतवे
रागादिघोरमकरमोहाकूपारसेतवे ॥

निरतिशयामन्दानन्दसन्दोहमपुनरावृत्तिलक्षणं मोक्षमेव परमपुमर्थं सकलजनस्यार्थनीयमावेदयता वेदेन दर्शितमेव संसारस्यासारत्वं स्फुटतरमनुपादेयत्वं च। निःश्रेयससरणिदर्शनानि च दर्शनान्युपस्कुर्वद्भिरश्रेयस्कर एवानुभवपरमप्रमाणैः प्रमाणितः संसारोऽयं मुनिजनैरपि तपोबलावलोकितसकलभुवनवस्तुतत्त्वस्वरूपैः। समस्तानामपि जगतीगतवस्तूनां "दुःखमेव सर्वं विवेकिनः" इत्यादिवचनैर्दुःखरूपतां "हेयं दुःखमनागतमि" त्यादिवचनैर्हेयरूपतां च विस्पष्टमुट्टङ्कयद्भिर्योगरहस्यविद्भिर्दर्शितामपि सकलसंसारहेयतां नैव चरितार्थयितुं समर्थः कोऽपि च समस्तवस्तुपरित्यागेन। न हि किल सलिलमुज्झितुं शतकोटिव्यापारैरपि पारयेयुर्वारिलवाः सलिलभावभाजः। नैव च तथैव शरीरेन्द्रियभुवनभवनवनगिरिकन्दरादिकमखिलमपि संसारमध्यगतमतिगन्तुमन्ततः क्षमते क्षमातलमिदमधिवसन् संयमिनामपि वरः। तस्मात् संसारगोचररागपरित्याग एव संसारत्याग इत्यस्मिन्नर्थे समुपस्थिते वैराग्यमेव संपादनीयं परमपुमर्थमर्थयद्भिरित्येव पर्यवसितार्थः संसारहेयतापरवचनानामिति सिध्यति। समर्थयति चैतमर्थं "शान्तो दान्त" इत्यादिकं वेदवचनमपि कैवल्यनिदानात्मयाथात्म्यदर्शनकारणतां वैराग्यावान्तरभेदलक्षणानां तत्कार्यरूपाणां वा शमदमोपरमतितिक्षादीनामाचक्षाणम्।

अस्य च वैराग्यस्य चतस्रः संज्ञाः शास्त्रेषु प्रतिपादिताः। यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञा चेति। तत्र संसारस्यासारतां दुःखरूपतां च विवेकतोऽवगत्य ततस्तदभिनिवेशनिवेशितविषयरागपरिहारचिकीर्षया तदसारतादिनिर-

न्तरपरिचिन्तनं प्रथमा प्रयतमानावस्था यतमानसंज्ञा। अनवरतपरिशीलिताभ्यासपरम्परापराकृतचित्तक्षोभस्य केषुचन कषायेषु पक्वेषु केषुचन चापक्वेषु सत्सु सूक्ष्मतरधिषणया तेषां विवेकपुरःसरमपक्वकषायाऽपरिपाककारणगवेषणापुरःसरं तत्परिपाकाय विशेषत उपायावलम्बनं व्यतिरेकसंज्ञा नाम द्वितीया पक्वेभ्यो व्यतिरिच्यापक्वानां विश्लेषणकरणलक्षणा। सेयं निर्वेदपदवीविनिहितपदानामनुभवपथमारोहति महतां– "त्यक्तो मया पुत्रमित्रकलत्रबन्धुजनगोचरो मोहान्धतमसनिपतननिदानवैषयिकरागस्तावत्; संप्रति प्रतिकर्त्तव्यः शब्दस्पर्शाद्यकिंचनविषयजनित क्षणिकसुखविषयकराग" – इत्येवमादिभावनाभावितशेमुषीजुषां विदुषाम्। एतदुक्तं भवति – स्थवीयसां पुत्रमित्रकलत्रादिविषयाणां रागस्योपमर्दनेऽपि तदपेक्षया सूक्ष्माणां शब्दादिविषयाणां रागः सहसा नोपमर्द्यत इति तत्र विशेषतो यत्नः क्रियत इति रागः किल विनियन्त्र्यमाणोऽप्येकत्र निकायमकामयमानस्यापि लभत इत्यप्यनुभवपथारूढमेव निगूढतत्त्वविचारणचणानां मनीषिणाम्। यथा दारसोदरादिगोचरमोहस्वरूपरागतः परागतमपि चेतस्तत्संस्कारसमपिहितं कमपि हितं शिष्यादिकमुपलभ्य लब्धप्रसरेण तेन निरूढसंस्कारेण मूढभावं भजते; यथा वा लौकिकसकलविषयपरिहारेऽपि शास्त्रादिषु वादविवादजनितानियतसुखेषु बिषज्जमानं तदीयवासनावासितं तेष्वेव निमज्जतीति। स्मर्यते च तदिदं त्यक्तसकलैषणस्यापि, स्वीकृतगहनकानननिवासस्यापि, निरन्तरानुष्ठिततपोनिष्ठासमासादितमानसस्थैर्यस्यापि भरतस्य राजर्षेर्ऋष्यपोतके समुद्भूतदुरपाकररागावेशस्य। सेयमेकेन्द्रियसंज्ञा नामैकस्मिन्निन्द्रिये मनसि संस्काररूपेण स्थितस्य रागस्य संभाव्यमानसामयिकप्रसरस्य समकालभवा तृतीया। दृष्टानुश्रविकविषयवितृष्णस्य च नष्टसकलरागसंस्कारस्याऽसंभाव्यमानसामयिकप्रसरस्य वशीकारसंज्ञा चतुर्थी। सापि परापरभेदाद् द्विधा। तत्रापरा विषयरागसंस्काराऽसमानकालिकी सत्यपि विषयसंस्कारकालिकी। यदा पुनर्निर्विचारवैशारद्यसद्योजाताध्यात्मप्रसादस्वरूपया तादृशप्रसादानन्तरभाविन्या वा ऋतंभरप्रज्ञया समुत्पन्न-

संस्कारेणान्यसंस्कारा: प्रतिबध्यन्ते तदा पुरुषख्यातिनिबन्धनं सर्वबन्धनहरणं परं वैराग्यमुत्पद्यते – "तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमि" ति सूत्रनिर्दिष्टम्। इदमेव च कैवल्यलक्षणमोक्षपरमकारणमिति हि वेदविदो वदन्ति। सा चेयं परा वशीकारसंज्ञा।

अत्र केचन प्रेमरसास्वादनरसिका भक्तिभावगौरवप्रतिष्ठापनपराः प्रत्यवतिष्ठन्ते – नीरसमिदं वराग्यं नीरसमेव च नितरां कैवल्यमपि। को नाम तदिदमभिलषतु मतिमानूहापोहकुशल इति प्रेमलक्षणा भक्तिः परमपुरुषार्थरूपा लोकैरर्थनीया सेवनीया चेति यया च जीवनमपि परमसरसं स्यादिति। तत्र ते प्रष्टव्याः – यन्नीरसशब्दान्तर्गतरसपदार्थः क इति। यदि वैषयिकरसस्तदा सेवतां कामं कामानेव भवान् सन्ततविषयैकचिन्तनयेति भक्ति कुतः कलुषीकरोति भगवद्विषयाम्। विषयेभ्य एव वैषयिकरसप्राप्तिसंभवात्। यदि च परमात्मलक्षणो रसो "रसो वै स" इत्यादिश्रुतिप्रतिपादितस्तदा "न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौममि" त्यादि (११-१४-२४) भागवतवचनाद् दृष्टानुश्रविकविषयवैतृष्ण्यलक्षणवैराग्याविनाभावित्वाद् भक्तेः कथं नीरसत्वं वैराग्यस्य ?! "यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे। विक्रीडतोऽमृताम्भोधौ किं क्षुद्रैः खातकोदकः" (६-१२-२२) "निष्किंचना मय्यनुरक्तचेतसः शान्ता महान्तोऽखिलजीववत्सलाः। कामरनालब्धधियो जुषन्ति यत् तन्नैरपेक्षं न विदुः सुखं मम" (११-१४-१७) "मैवं विभोऽर्हति भवान् गदितुं नृशंसं संत्यज्य सर्वविषयांस्तव पादमूलम्" (१०-२९-३१) "मय्यर्पितात्मनः सभ्य निरपेक्षस्य सर्वतः। मयात्मना सुखं यत्तत् कुतः स्याद्विषयात्मनाम्" (११-१४-१२) "विषयान् ध्यायतश्चित्तं विषयेषु विषज्जते। मामनुस्मरतश्चित्तं मय्येव प्रविलीयते" इत्यादीनि च शतशो भागवतवचनानि भक्तेर्वैराग्याऽविनाभावित्वं व्यञ्जयन्ति। तस्माद्वैषयिकरसपरित्यागासमर्था एव कदर्थितसकलशास्त्रार्था वैराग्यं विनिन्दन्तीति निश्चितं भवति। न खलु परमात्मानुरागपरित्यागः क्वचनापि वैराग्यप्रकरणेऽभिहितो

भवति । प्रत्युत " भवन्नाम स्वामिन् शिवशिवशिवेत्येव कलये ( पृ. ८७ ) " " मानेन किं.........जातं न चेन्निजमनो हृतरागपूगं श्रीचन्द्रचूडचरणाम्बुजचञ्चरीकम् ( पृ. ५९ ) " इत्येवमादिकमेतद्ग्रन्थीयं वचनं " रे कन्दर्प करं कदर्थयसि किं कोदण्डटङ्कारितैः............चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्त्तते " इति भर्तृहरीयवैराग्यशतकस्थं च भगवदनुरागमेव वैराग्यवतामुपोद्बलयति । " विषयवितृष्णस्ये " ति सौत्रं पदमपि विषयत एव वैराग्यं बोधयति न तु भगवतः । तस्मान्मूढा एव निगूढविषयरागवासनावासितमनसो वैराग्यमभिद्रुह्यन्ति । यच्च कैवल्यमपि नीरसमिति भणितं तदप्यसत् । रसरूपपरमात्मभावापत्तेर्नीरसत्वानुपपत्तेः । ननु शर्करारसास्वादनमेव जनानामभिमतं न तु शर्करास्वरूपापत्तिरेवमेव भगवद्रसास्वादनमेव सचेतसामभिमतं भवितुमर्हति न तु भगवत्स्वरूपापत्तिः । स च मूढमतिरेव शर्करास्वरूपमापित्सुरिव भगवत्स्वरूपापत्तिमभिलषन्नपीति चेद् ? धन्यो भवान् दयनीयश्च यद् भगवन्तमेव मूढमतिं ब्रवीति । हन्त तावद् भगवान् भगवत्स्वरूपभाङ् न वा । यदि नास्ति तदा व्याघातः । यद्यस्ति तदा भगवत्स्वरूपेणावस्थानं मूढमतिलक्षणं त्वयैवोक्तमिति भगवतो मूढमतित्वं कथं वार्येत ? । अथ भगवत्स्वरूपेण स्थितो भगवान् न मूढः किन्तु तत्स्वरूपापन्नो जीव इति मनुषे; तदपि न; भगवत्स्वरूपापत्त्यनन्तरं जीवत्वविरहात् । अथ भक्तरसेन भगवतस्तुष्टिरिति न मूढमतित्वं प्रसज्यते भगवत इति चेद् ? भगवत्स्वरूपापन्नस्यापि तदेवोत्तरं, निरपेक्षत्वाच्च भगवत्तुष्टेरित्यलं मूर्खैः सह बहुलालापेन । एतदप्यभ्युपेत्योक्तम् । प्रकृतग्रन्थे तु केवलं विषयवैराग्यमेव मुख्यरूपेण प्रतिपादितमिति न द्वैताद्वैतकलहमध्ये केनचित् पतनीयम् ।

अस्यां च वैराग्यमन्दाकिन्यां त्रिषु खण्डेषु लहरीपदाख्येषु यथोक्तं चतुर्विधं वैराग्यं निदर्शयितुमुद्भावयितुं चाष्टकदशकादिरूपेणार्थविवेचनं कृतम् । तत्र प्रथममुपक्रमविधया वैराग्यविषयमुपक्षिप्य प्रथममेव जगदनिर्वाच्यत्वं संसारमोहपरिहारौपयिकाविरतसंपादनीयभावनास्पदभूतं प्रदर्श्य जगदसारत्वदर्शनपुरःसरं

जन्मफलदशकेन परमात्मप्राप्त्युपायावलम्बनीयता प्रतिपादिता। ततः परमालहरीसमाप्ति भोगदुःखतादिप्रदर्शनेन प्रापञ्चिकवस्तु-परिहेयतैव प्रपञ्चिता। द्वितीयस्यां लहर्यामान्तरभावोपपादनप्रधानायां मोहादीनां हेयत्वमुपादेयत्वं च विवेकादीनां प्रदर्शितम्। वैराग्योद्भावनौपयिकभूतार्थोदाहरणाविना फलजननप्रधाना च तृतीया लहरी। प्रासङ्गिकविवेचनायां क्रियमाणायां क्वचिल्लहरीविषयसांकर्यं नद्यादिषु लहरीसांकर्यस्य वहुधा दृष्टत्वाददोषावहमिति नैव प्रत्यगण्यतानुपयुक्तत्वाच्चाधिकसन्धिबन्धनादेर्वैराग्योद्भावने।

अत्र च पूर्वाचार्यैर्भर्तृहरिशंकरभगवत्पादप्रमुखैर्वैराग्यविषयेऽस्तोकममोघसुललितप्रसन्नगम्भीरगीर्भिर्विवेचितं यद्यपि विद्यते तथापि यथासमयं स्वीयहृदये समुद्भवन्तं भावमन्यसमयेऽप्यनुवर्त्तयितुकामेनाविस्मरणायैव स्वमनस्तोषायैव च मयोपनिबद्धेयं वैराग्यमन्दाकिनी। अत एव सुपूर्वमेव समापितोपनिबन्धामपि न सुललितपदान्तरावलीपरिगुम्फितां विधातुमविलम्बितमेव प्रकाशपदवीमारोहयितुं च विशेषतः प्रायतिषि। भविष्यति हि लोकानामेवं चेतसि यदयमप्रतिलब्धतीव्रतरवैराग्य एव वैराग्योपदेशं परोपदेशे पाण्डित्यमिति न्यायेन विधातुमीहत इति प्रकाशितामिमां विलोकयताम्। प्रसङ्गवशेन कदाचिदुदाहृतानेतत्पुस्तकान्तर्गतद्वित्रश्लोकानाकर्ण्य सञ्जातकुतूहलेनानुजातजिज्ञासेन केनचिन्मनीषिणा एतन्मन्दाकिनीस्थयशोष्टकाभिहितार्थसार्थकयता सता विहितार्थव्ययेन स्वनामप्रकाशनेऽकृतानुमतिनव प्रकाशमियं नीतेति एतदुपर्युपक्षिप्यमाणतथाविधाक्षेपाणां स एवोत्तरदायित्वमावक्ष्यति लप्स्यते वा स एवैतत्पुस्तकप्रकाशनेन यस्य कस्यचिद्विदुषःसंतोषश्चेज्जातस्तर्हि तत्प्रयुक्तश्रेयसश्च पात्रतामिति।

सुधियामनुविधेयः काशिकानन्दः।



वेदान्तमन्दारकलिकान्तर्गतं

# सोऽहं दशकम्

समस्तेषु वस्तुष्वनुस्यूतरूपोऽप्यशेषैर्विशेषैरनामृष्टकायः ।
अखण्डैकनित्यापरोक्षस्वभावः सदानन्दचिन्मूर्त्तिरोंसोऽहमस्मि ॥

विशुद्धेऽपि वस्तुन्युपाक्षावृताक्षः समारोपयेत्काचगं मेचकादि ।
जगन्मायिकं यत्र मायावृताक्षः समारोपयेदेवमोंसोऽहमस्मि ॥

चलच्चित्रगाश्चित्रभान्वादयो न प्रदीपं समुद्भासयन्तेऽनुभान्तः ।
तथा सूर्यचन्द्रादयोऽमी यमिन्द्रं जगद्भासकं देवमोंसोऽहमस्मि ॥

चलच्चित्रसर्पं विलोक्यापि सर्पं यथा कल्पयेदल्पबुद्धिस्तु रज्जौ ।
अनाद्यैः प्रपञ्चभ्रमैश्च प्रपञ्चं विचित्रञ्च यत्रैवमोंसोऽहमस्मि ॥

यथा सैंहिकेयः स्फुरेदिन्दुबिम्बे घटत्वं घटे व्यज्यते व्यापि यद्वत् ।
तथाऽखण्डवृत्तावभिव्यज्यते यो जगद्व्यापको विष्णुरोंसोऽहमस्मि ॥

प्रकाशस्वरूपेऽपि घोरान्धकारं दिवान्धो जगच्चक्षुषीक्षेत यद्वत् ।
तथा ज्योतिरात्मन्यनिर्वाच्यमाया-तमोविभ्रमो यत्र सोऽहं शिबोऽस्मि ॥

घटीयोऽपि भेदो घटाद्भिन्नरूपो न भेदान्तरं तत्र भेदप्रयोक्तृ ।
तथा यस्य मायापि मायान्तरं सं-घटेतान्तरेणान्तरात्मास्मि सोऽहम् ॥

न हि व्योम्न्यमत्रादिसादृश्यलेशो न वा चाक्षुषः पौरुषश्चापि दोषः ।
कटाहभ्रमोऽयं तथाप्येव तद्वत् प्रपञ्चभ्रमो यत्र सोऽहं परोऽस्मि ॥

यथा शर्करालेशसंपर्कहेतोः स्युरन्नानि मिष्टानि नानाविधानि ।
यदानन्दमात्रां गृहीत्वा तथार्थाः सुखव्यञ्जकाःस्युः परात्मास्मि सोऽहं ॥

अजोऽहं निरीहो निराकाररूपः परोऽहं सदानन्दचिन्मात्रमूर्त्तिः ।
शिवोऽहं जगद्व्यापकोनाद्यनन्तः सदद्वैतरूपोऽहमोंसोऽहमात्मा ॥

इति श्रीमङ्गलार्णवयतिविरचितायां वेदान्तमन्दारकलिकायां
सोऽहं दशकम् ।

श्रीमङ्गलार्णव(प्रसिद्धकाशिकानन्द)यतिविरचिता

# वैराग्यमन्दाकिनी

## प्रथमा लहरी

( उपक्रमपञ्चकम् )

गाङ्गैरुत्तुङ्गवीचीकलहसमुदितैरुच्छलद्भिः समन्ता-
न्मुक्ताहाराभिरामैः प्रयतकणगणैः पावयन् सर्वभावान् ।
विन्यस्तध्यानमुद्रः शममधिगमयन् प्राणिनः संनिधिस्थान्
देवः कन्दर्पदर्पज्वरभरशमनः शंकरो नः पुनातु ॥१॥

वैराग्य मन्दाकिनी के प्रारम्भ में मदनान्तक अत एव वैराग्य प्रदान करने में परम समर्थ भगवान् शंकरजी की स्तुति करते हुए उनसे मन, वाणी और शरीर की पवित्रता के लिये प्रार्थना करते हैं—

भगवान् शंकरजी के मस्तक में पतितपावनी गंगा विराज रही है। उससे उठी हुई तरंगें इस प्रकार आपस में टकरा रही हैं कि, मानो वे कलह कर रही हैं। उन टकराती हुई तरंगों से उठकर चारों ओर उछलते हुए मोती के हार के समान शोभायमान जलकणों से भगवान् शंकरजी आसपास के सभी प्राणीवर्ग को पवित्र कर रहे हैं। शंकर भगवान् ध्यानमुद्रा लगाये बैठे हैं, और उस ध्यानमुद्रा से समीप में वर्तमान समस्त प्राणियों के अंदर शांति का संचार कर रहे हैं। कामदेव के ज्वर सदृश दर्प को शमन करनेवाले, कल्याणकारी, ज्ञान प्रकाश स्वरूप वे भगवान् शंकर हमें पवित्र करें ॥ १ ॥

सस्यवज्जायमानानां बृंहतामनुनश्यताम् ।
पश्यन्तं कौतुकं कंचित् साक्षिणं प्रणमामि तम् ॥ २ ॥

वैराग्योद्दीपनार्थ जीवन की क्षणिकता दिखाते हुए "सस्यमिव पच्यते मर्त्यः सस्यमिवाजायते पुनः" इस श्रुति का अर्थ हृदय में रखकर मंगलरूप से साक्षीरूप परमात्मा को प्रणाम करते हैं–

हम हमेशा अनुभव करते हैं कि, छोटे छोटे पौधे उत्पन्न होते हैं; कुछ दिन में बढ जाते हैं और उसके अनन्तर नष्ट हो जाते हैं। हमारे लिये यह एक कौतुकमात्र है, कोई महत्त्वपूर्ण घटना नहीं है। इसी प्रकार हमारा भी उत्पन्न होना, बढना और नष्ट होना, जिसके लिये एक कौतुकमात्र है, उस साक्षीरूप परमात्माको मैं प्रणाम करता हूं ॥ २ ॥

भावं भावं भवति तरसोन्मीलितस्थूलभावं
स्फायं स्फायं पृथुलमतुलं बोभवीति क्षणेन ।
क्षायं क्षायं महितमभितः पश्यतो नश्यतीदं
कालाधीनं विपरिणमते सर्वमेवं क्रमेण ॥ ३ ॥

वस्तु उत्पन्न होती हैं और अतितीव्रगति से स्थूल हो जाती हैं एवं स्थूल होते होते क्षणभर में अपनी चरम सीमा तक पहुंच जाती हैं। उसके बाद उसका क्षय प्रारम्भ होता है और सब प्रकार से महान् बनी हुई भी वस्तु हमारे देखते देखते नष्ट हो जाती हैं। इस प्रकार कालाधीन समस्त वस्तु निरन्तर परिणाम को प्राप्त होती रहती हैं ॥ ३ ॥

दृष्टो बालः कियदपि दिनं केलिलोलः स पश्चाद्
दर्पावेगभ्रमितधिषणः सैषणो यौवनस्थः ।
वृद्धश्चिन्ताशतपरवशो हीनशक्तिस्ततोऽसौ
सर्वोऽप्येव क्षणमिव पुरः स्वप्नवच्च प्रयातः ॥ ४ ॥

खेलमें तत्पर हुआ कुछ दिन बालक के रूपमें जो दिखायी दिया वही थोड़े दिन बाद दर्प से उन्मत्त, पुत्रादि - एषणाओं से युक्त, युवा के रूपमें दिखायी पडा। कुछ दिन बाद वही शक्तिहीन तथा नाना प्रकार की चिन्ताओं से व्याकुलित हुआ वृद्ध के रूपमें दिखायी दिया और उसके बाद वे सारे खेल स्वप्न के समान क्षणभर में सामने ही विलीन भी हो गये ॥ ४ ॥

इत्थं समस्तमपि वस्तु निरीक्ष्य चापि
त्वङ्गत्तरङ्गरयसंगतबुद्बुदाभम् ।
आपीय मोहमधु बोधनिबद्धवैरा
वैराग्यलेशमपि नैव समाश्रयन्ते ॥ ५ ॥

इस प्रकार समस्त वस्तुओं को उठती हुई तरंगों के ऊपर दिखायी देनेवाले बुद्बुदों के समान क्षणभंगुर देखते हुए भी मोहरूपी मदिरा पिये हुए मनुष्य अत एव बोध के बैरी ( अक्कल के शत्रु ) लेश मात्र भी वैराग्य को प्राप्त नहीं होते ॥ ५ ॥

अनिर्वचनीयताष्टकम् ।

पूर्वं पूर्वतरं च पूर्वतममित्येवंदिशा चिन्तयन्
कल्पादिं गणनाचणः समगमं पूर्वांश्च कल्पान् बहून् ।
यत्रैव व्यरमं निरैक्षिषि ततः क्षिप्यन् दृशं पूर्वतो
निर्विशेष्यमशेषमद्यदिवसात् सर्वं सपूर्वं दिनम् ॥ ६ ॥

पूर्व, उससे भी पूर्व, उससे भी पूर्व; इस रीति चिन्तन करता हुआ मैं कल्प के आदि तक पहुंचा, और उससे पूर्वकल्प, पूर्वतरकल्प, इस प्रकार हजारों, लाखों कल्पतक भी पहुंचा। किन्तु जहां जाकर रुकता हूं और वहां से पूर्व की ओर दृष्टिपात करता हूं तो प्रतीत होने लगता है कि, मैंने कुछ गिना ही नहीं, आज का ही वह दिन

है। आज से पूर्व जितना समय है उतना ही समय वहां से भी पूर्व है ॥ ६ ॥

इत्थं चोत्तरमुत्तरोत्तरमिति श्रित्वाऽपरां च प्रथां
कल्पान्तं गतवांस्ततः परतरान् कल्पाननल्पानपि ।
यत्रैवोपरतस्तमेव सपरं निर्वर्ण्य पारं क्वचा-
प्यप्राप्तुर्मनसा सहैव सहसा वाचो निवृत्ता मम ॥ ७ ॥

इसी प्रकार दूसरी ओर उत्तर, उसके भी उत्तर ( बाद ) इस रीति चिन्तन करता हुआ मैं कल्पान्त तक पहुंचा और उससे उत्तर कल्प, उत्तरतरकल्प इस प्रकार लाखों करोडों कल्प आगे तक भी पहुंचा। किन्तु जहां भी जाकर रुकता हूं उससे भी आगे कल्प पाये और उस काल का पार न पाकर मनके साथ मेरी वाणी सहसा निवृत्त हो गयी। इन दो श्लोकों से जगत की कालकृत अनिर्वचनीयता बतायी ॥ ७ ॥

समयः समवैक्षि योऽपि वा महतो मध्यमसावनेहसः ।
बहवः किमु मध्यबिन्दवः किमु वा विभ्रम एष धीजुषाम् ॥ ८ ॥

यद्यपि हमें प्रतीत होगा कि, आज से पूर्व की या उत्तर की ओर गिनने से जितने कल्प गिनती में आयेंगे उनसे कम ही एक करोड कल्प पूर्व के या बाद के समय से गिनने पर गिनती में आयेंगे। किन्तु विचारदृष्टि से देखेंगे तो एक करोड कल्प पूर्व या उत्तर से गिनने पर भी उतने ही कल्प गिनती में आयेंगे जितने कि आज से गिनने पर। कारण, काल निरवधि है। जितने ही गिनेंगे उतने ही आगे समय निकलते जायेंगे। अत एव जो भी समय हम देखेंगे वह उस महाकाल का मध्य ही पायेंगे। क्या एक दीर्घायमान काल में बहुत से मध्यबिन्दु हो सकते हैं? या जैसे एक लंबी लकीर में अनेक

मध्यबिन्दु की प्रतीति भ्रम मात्र है वैसे मध्य के रूपमें दिखायी देनेवाले ये सारे काल भ्रम मात्र तो नहीं हैं ? ॥ ८ ॥

**विकासवादो विगतो हृदिस्थो विनिःसृतो ह्रासविलासवादः ।**
**अगम्यमाने खलु कालमाने क्व ह्रासवादः क्व विकासवादः ॥ ९ ॥**

आधुनिक विज्ञानवेत्ताओं के अनुसार मेरे हृदय में जो यह भावना बैठी थी कि विकासवाद ठीक है, इस काल की दीर्घता की ओर दृष्टिपात करने से वह नष्ट हो गयी और इसी कारण प्राचीन दार्शनिकों के सिद्धान्त के अनुसार कुछ दिन यह जो भावना बैठी थी कि उत्तरोत्तर ह्रास होता है, वह भी समाप्त हो गयी। जो काल मन-वाणी का अविषय है उसमें ऐसा निर्णय देना किसी के लिये भी शक्य नहीं है कि विकासवाद ही ठीक है या ह्रासवाद ही ठीक है, कारण जहां मन वाणी पहुंच सकते हैं वहीं पर मनुष्य निर्णय दे सकता है ॥ ९ ॥

**[1]ऊर्ध्वं चोर्ध्वममुष्य चोर्ध्वमिति मे चेतोऽजिहीतोर्ध्वतः**
**क्रोशान् कोटिमितांस्तथाऽर्बुदमितान् शङ्खानसंख्यानपि ।**
**यत्रैवोपरतं तदन्तमखिलं शून्योपमं प्रत्यगाद्**
**यत्तस्योर्ध्वमलक्ष्यतान्तरहितं स्थानं निजागोचरम् ॥ १० ॥**

---

१ आर्यसमाज के आद्यप्रवर्त्तक महर्षि दयानन्द ने जिज्ञासुओं के बुद्धि-वैशद्यार्थ अथवा स्वकल्पितपक्षरक्षार्थ अपुनरावृत्तिरूप मोक्ष पर इस प्रकार आक्षेप किया है कि– मुक्तजीवों का यदि पुनरागमन न होता हो तो आज तक संसार समाप्त हो गया होता। समुद्र के किनारे परार्ध से भी अत्यधिक संख्या में रेती पडी है। उनमें से यदि एक एक कण उठाकर फेंक दिया जाय तो वह कथमपि खतम नहीं हो सकती। परन्तु यह केवल एक स्थूल दृष्टिमात्र है। हम सूक्ष्मदृष्टि से विचार करें तो यह निश्चित प्रतीत होगा कि एक साल दो साल में समाप्त न हो, किन्तु करोडों अरबों वर्षों में जाकर वह भी समाप्त-

ऊपर, उससे ऊपर, उससे भी ऊपर इस प्रकार चिन्तन करता हुआ मेरा मन करोड, अरब, शंख तथा असंख्य कोस ऊपर गया। परंतु जहां भी वह रुकता है और वहां से ऊपर को देखता है तो तबतक जितना ऊपर दूर गया वह शून्य समान दिखायी पडने लगा। कारण, वहां से भी उसी प्रकार अन्त रहित ऊर्ध्व दिशा, जो मन के लिये जानना अशक्य है, दिखायी दी ॥ १० ॥

इत्थं गच्छदधो मनः सुनिपुणं दूरात्सुदूरं गतं
नानादिक्षु च किन्तु वीक्ष्य सकलास्तावन्निरस्तावधीः ।
स्वस्याशेषमकल्पनास्पदपदं निश्चिन्वदल्पीयसः
साकं संन्यवृतत्स्मृतागमवचो वाचा पराभूतया ॥ ११ ॥

---

हो ही जायेगी। कारण एक एक रेत उठाकर फेंकने पर घटती ही तो है, बढती तो नहीं है। इसी प्रकार, माना कि जीवों की संख्या परार्ध से भी अत्यन्त अधिक है, फिर भी यदि एक एक करके मुक्त हो जाय तो भी, फिर न लौटें तो, दीर्घकाल में इनकी भी समाप्ति होना अनिवार्य है। कारण जीवों की उत्पत्ति नहीं होती है जिससे उनकी संख्या बराबर होती रहे और एक एक करके घटता भी जा रहा है। पूर्वोक्त रीति से काल की दीर्घता की ओर हम दृष्टिपात करते हैं तो कितना काल आज तक बीत चुका यह मन और वाणी का अविषय हो जाता है अत एव आज तक सारे जीवात्मा समाप्त होने चाहिये थे। भले ही एक कल्प में एक ही मुक्त हो, तो भी कितने अनन्तानन्त कल्प बीत गये इसका कोई पता नहीं अत एव आज तक जीव का अस्तित्व रहना अशक्य है। इतना हो नहीं करोडों कल्प पूर्व भी जीवों का अस्तित्व दुर्घट है; कारण, तब तक भी कितने कल्प बीत गये इसकी कोई गिनती नहीं हो सकती है। अतः सिद्धान्त रूप से यही मानना चाहिये कि मुक्त पुरुष कुछ अरब बरस तक परम सुख का अनुभव कर फिर इस संसार में लौट आते हैं; इसी कारण यह संसार बना रहता है।

महर्षि दयानन्द के इस आक्षेप का ध्वनिमात्र से उत्तर देते हुए जगत की अनिर्वचनीयता को प्रकारान्तर से दो श्लोकों के द्वारा स्फुट करते हैं।

इसी प्रकार नीचे की ओर जाता हुआ मेरा मन बहुत दूर जा निकला तथा नाना दिशाओं की ओर भी। किन्तु सभी अवधि रहित ही सामने पाये। तब मेरा मन अपना तुच्छ स्वरूप एवं जगत् को अपनी कल्पना से अतीत निश्चित कर अन्यार्थक होने पर भी यहां पर घटमान "**यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह**" इस श्रुतिवचन को स्मरण करता हुआ, पहले से ही हारी हुई वाणी के साथ, निवृत्त हो गया[1] ॥ ११ ॥

---

१ इन दो श्लोकों से महर्षि दयानन्द के आक्षेप का परिहार हो जाता है। समस्त जीवन ही नहीं अपि तु अनन्त काल पर्यन्त ऊपर, उसके ऊपर इस प्रकार ऊर्ध्व की ओर जाते रहेंगे तो भी पार नहीं पा सकेंगे। जहां भी रुकेंगे उसके भी ऊपर देश होगा ही। इस अवधिशून्य देश में लोकलोकान्तर और प्राणी भी अवश्यं भावी है। इस प्रकार इश्वर मुक्त होते जायेंगे, उतने के उतने ही आगे निकलते ही जायेंगे। जैसे काल की समाप्ति नहीं है वैसे देश की भी समाप्ति नहीं है। अत एव घटने पर भी जीव नहीं घटते। और न समाप्त ही होते। "पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इस श्रुति का यथाश्रुत अर्थ भी इसी बात को सिद्ध करता है। अर्थात् अनन्तरूपी पूर्ण से एक दो क्या, अनन्त ही ले लिया जाय तो भी पूर्ण अर्थात् अनन्त ही अवशिष्ट रहता है।

सामान्य दृष्टि से यहां पर यह शंका उपस्थित होगी कि, नये जीव नहीं आते और पुराने जीव मुक्त होते जा रहे हैं तो कभी न कभी समाप्ति होगी ही। परन्तु ऐसी शंका करनेवालों से यह पूछा जायेगा कि तुम प्राणियों को मुक्त करते हुए कल्पनारूप से ऊपर की या किसी भी दिशा की ओर जावो और कहां पहुंचने पर तुम्हें जीवों की समाप्ति मिलेगी यह बतावो। पर समाप्ति कहीं पर भी दीखनेवाली नहीं है। जहां समाप्ति की संभावना करोगे उससे भी आगे देश और प्राणी मिलते ही जायेंगे। इसमें कारण उसकी अनन्तता ही है।

इस अवस्था में यही प्रश्न उपस्थित होगा कि – तब फिर समाप्त होते हुए भी समाप्त नहीं होते यह क्या अद्भुत जादू है? जीव घटते जा रहे हैं फिर भी नहीं घटते यह क्या आश्चर्यकारी लीला है? इस प्रश्न का उत्तर भी वही है कि

अणीयांसं पांसुं प्रभवति विवेक्तुं न पुरुषो
न शक्तस्तच्छक्तिर्भवति कियतीत्याकलयितुम् ।
अनन्तब्रह्माण्डस्ववगतिकथा का पुनरथा-
प्यपूर्वं सार्वज्ञ्यं निजममितगर्वः प्रथयति ॥ १२ ॥

" अणवः सर्वशक्ताः स्युः " यह वाक्यपदीयवचन है। आधुनिक वैज्ञानिकों का भी कहना है कि एक अणुके अंदर इतनी शक्ति है कि हम उससे एक मिनट में सारी दुनिया को नष्ट कर सकते हैं। इस एक अणु को भी हम यथावत् पहचान नहीं सकते तब अनन्त ब्रह्माण्डों को भली भांति जानने की कथा तो दूर है। फिर भी महा गर्वी मनुष्य अपनी विलक्षण सर्वज्ञता बतलाता हुआ लज्जित नहीं होता। ( प्रमेयत्वादिरूप से ज्ञान हो सकता है अतः सु-अवगति की दुर्लभता कही गयी ) ॥ १२ ॥

तस्मादस्माकमेषा मतिरखिलमिदं बाललीलाविलासं
दृष्ट्वा वादं विवादं विविधमपि तथा शास्त्रसिद्धान्तजातम् ।
सर्वानिर्वाच्यतायां व्यवसितिमियती हेयमालोक्य सर्वं
निर्धूताखर्वगर्वा श्रयति सकलतो हन्त वैराग्यमेकम् ॥ १३ ॥

ह्रासवाद, विकासवाद आदि सभी वाद, विवाद वा शास्त्रसिद्धान्त केवल एक बाललीलामात्र है; वास्तव में सारा ही जगत् अनिर्वचनीय है; इस प्रकार निश्चय को प्राप्त हुई मेरी मति गर्वशून्य होकर सारे

---

यह अघटितघटनापटीयसी माया महाद्भुत है, अनिर्वचनीय है, उसका कार्य भी महाद्भुत एवं अनिर्वचनीय है।

ग्रन्थकार का यहां पर यद्यपि किसीके मतनिरास में तात्पर्य नहीं है। किन्तु जगत् की अनिर्वचनीयता दिखाने में ही है अत एव उससे वैराग्य प्राप्त करने में ही तात्पर्य है; किन्तु उपर्युक्त रीति से आक्षेप समाधान भी हो जाता है इस दृष्टि से आक्षेप और समाधान दिखाये गये।

जगत को हेय समझती हुई एक वैराग्य का ही आश्रयण कर रही है ॥ १३ ॥

असाराष्टकम् ।

नैकं जन्माभवन्मे न च दश न शतं नो सहस्रं न कोटिः
कोटीनां नापि कोटिर्गणनविषयता यस्य दूरादपेता ।
जायाः कत्येव रायः कति कति पितरः कत्यपत्यान्यभूवन्
किं तैर्हन्त प्रयातैः किमु समुपगतैः किं च संगच्छमानैः ॥ १४ ॥

जगत् असार होने के कारण हेय है इस अर्थ को आठ श्लोकों में बतला रहे हैं ।

मेरा एक जन्म नहीं, दस नहीं, सौ नहीं, हजार नहीं, करोड नहीं, और करोडों के करोड भी नहीं; कारण, उसकी गणना ही नहीं हो सकती है। इसके बीच में कितनी पत्नियां हुई, कितने धन हुए, कितने पिता हुए और कितने पुत्र हुए यह नहीं बतलाया जा सकता। पर उन गये हुओं से और प्राप्त हुओं से आज तक क्या प्रयोजन सिद्ध हुआ यह बतलाना कठिन है। वास्तव में उनका आना जाना मिलना सभी निष्फल ही हुआ। कोई प्रयोजन आज नहीं दीख रहा है। उन बीते पति, पत्नी, धन दौलत से आज कोई प्रयोजन नहीं प्रतीत हो रहा है। इसी प्रकार जो आज प्राप्त हो रहे हैं ये भी निष्प्रयोजन ही चले जायेंगे। भले ही आज उनकी निष्प्रयोजनता प्रतीत न हो किन्तु कुछ दिनों के बाद इन प्राप्त होनेवालों की भी निष्प्रयोजनता स्पष्ट प्रतीत हो जायेगी ॥ १४ ॥

भीतिर्बाल्ये गुरुभ्यो मदनशरहतिः शैशवान्ते दुरन्ता
नारीणां संतताराधनजनितमनःक्लेशसंदर्भगर्भा ।

अन्ते कौटुम्बचिन्ताद्विगुणितविपुलाभीलजम्बालपातो
यातं सर्वायुरेवंविधमथ च कुतोऽप्येव सौख्यं न दृष्टम् ॥ १५ ॥

बाल्य में अपने बडों से भय, यौवन में कामदेव का उग्र आघात और साथ में नारियों की आराधना से उत्पन्न हुए असह्य क्लेशों का संमिलन, अन्त में कुटुम्ब चिन्तन से दुगुनी हुई बेचैनी के कीचड में पतन, इस प्रकार सारी आयु बीत गयी; और कहीं से भी सुख प्राप्ति दिखाई नहीं दी ॥ १५ ॥

दारान् काप्युग्रभारान् क्वचन च तनयानामयाक्रान्तकायान्
क्लेशान् काये स्वकीये क्वचिदपि पिशुनातङ्कपङ्काभिषङ्गान् ।
चिन्तासन्तानदीर्घा दुरपनयतमीः क्वापि निर्यापिताश्च
ध्यायन्ती वस्तुनीह क्वचन च न च मे शेमुषी निर्वृणोति ॥ १६ ॥

गृहस्थ जीवन की ओर एक बार दृष्टिपात करते हैं तो कहीं पत्नियों के संभाल की कठिनता, कहीं लडके बीमार, कभी अपने ही शरीर में क्लेश, कभी धूर्तों के चंगुल में फंस जाने से आपत्तियां, कभी चिन्ता के कारण लम्बी रात्रियों का मुश्किल से काटना; इन सबको सोचते हुए मेरा मन किसी भी वस्तु में निर्वृति को प्राप्त नहीं हो रहा है, अर्थात् सुख की आशा किसी भी वस्तु में दीख नहीं पड रही है; अत एव किसी भी वस्तु से मुझे शान्ति प्राप्त नहीं हो रही है ॥ १६ ॥

निद्राभङ्गेन जातामुषसि विकलतामौदरातङ्कहेतो-
रुद्भूतं दौर्मनस्यं तदनु जनधनाहारसंभारचिन्ताम् ।
श्रान्तिं सायं नितान्तं प्रतिदिनमनुभूयैव निर्याप्यमाणे
जन्मन्याशाविवर्जे वदत सुखकणो वापि संभाव्यते चेत् ॥ १७ ॥

प्रतिदिन की चर्या देखने से भी जीवन अत्यन्त असार प्रतीत होता है। प्रातःकाल निद्रा भंग होने से कष्ट, उदर बराबर न होने से मन में मलिनता, उसके बाद जन-धन-भोजनसामग्री की चिन्ता, सायंकाल थकावट; इसी प्रकार प्रत्येक दिन और वैसे ही सारा जीवन बीत जाता है। मनुष्य सोचता है कि आज नहीं तो कल अवश्य ही सुख मिलेगा, पर उसकी यह आशामात्र ही रह जाती है ॥ १७ ॥

विद्यालाभाय पूर्वं तदनु वसतये जीविकायै स्वकाना-
मुद्वाहायात्मजायास्तनयभरणतश्चेति संजायमानैः ।
नित्यं चिन्तावितानैर्नवनवविपदैः सर्वमायुर्नयन्तः
सर्वेऽप्यागामिशान्तेर्दधति तु जगति प्राणमाशावलम्बाः ॥ १८ ॥

प्रथम पढने और विद्या प्राप्त करने की चिन्ता, उसके बाद अपने तथा संबन्धियों के रहने के स्थान आदि की चिन्ता, नौकरी आदि प्राप्त करने की चिन्ता, युवती पुत्री के विवाह की चिन्ता पुत्र को लायक बनाने की चिन्ता, इस प्रकार की चिन्ताओं में ही सारी आयु बीत जाती है। फिर भी मनुष्य इस आशा में ही रहता है कि आगे शान्ति मिलेगी और इसी आशा में अपने प्राणों को भी धारण करता[1] है ॥ १८ ॥

---

१ तात्पर्य यह है कि पढते समय मनुष्य सोचता है कि पढाई समाप्त होने पर हम सुखी हो जायेंगे धन कमाते रहेंगे। परन्तु पढने के बाद फिर जीविका चलाने की चिन्ता होती है तब सोचता है कि कुछ नौकरी आदि मिल जायेगी तो सुखी हो जायेंगे। नौकरी मिलने पर अलग रहने तथा स्वजनों के निवास-स्थान की चिन्ता लग जाती है और सोचता है कि रहने का ठिकाना हो जायेगा तो शान्ति मिल जायगी। फिर विवाह की चिन्ता उसके बाद लडके लडकी हो जाते हैं तो उनको सब रास्ते पर लगाने का फिकर होता है और उसके बाद निवृत्ति सुख अनुभव करने की आशा रखता है। परन्तु उत्तरोत्तर झंझटें बढती ही जाती है और केवल आशा में ही सारी आयु चली जाती है।

मन्वानः सविधं जलं मृगशिशुर्धावन् सृतौ धन्वनो
दूरं याति विलोक्य वारि पुरतस्तत्रापि चाशायुतः ।
धावं धावमुदग्रभास्करकरैः संधर्षितस्तर्षतः
प्राणान् स्वान् पतितः क्षितौ बहिरियज्जिह्वोऽन्तयत्यन्ततः ॥ १९ ॥

पास ही जल है ऐसा समझकर मृगबालक मरुमार्ग में दौडता हुआ दूर जा निकलता है और वहां भी सामने पानी देख कर आशा से फिर दौडता है । इस प्रकार दौड दौड कर प्रखर सूर्य किरणों से व्याकुलित हुआ वह प्यास के मारे भूमि में पड जाता है, जिह्वा बाहर निकालता है और अन्त में अपने प्राणों का भी अन्त कर देता है ॥१९॥

एतां संतीर्य कष्टां स्थितिमथ सुखितः स्यामिति प्रश्रिताशो
यावत्तां निस्तृणोति प्रतिभयमपरं कष्टमापद्यतेऽसौ ।
नित्यं नेदिष्ठमेवं सुखमुपकलयन् सर्वमायुर्विमूढो
नीत्वा कृच्छ्रातिकृच्छ्रे तमसि विनिपतन्नन्तकातिथ्यमेति ॥ २० ॥

थोडे दिन के लिये कठिन परिस्थिति है, इसके बाद मैं सुखी हो जाऊंगा, इस प्रकार आशा बांध कर जब तक उस परिस्थिति को झेल लेता है तब तक दूसरी कठिनाई आ खडी हो जाती है और तब भी मनुष्य सोचता है कि इसे पार कर मैं सुखी हो जाऊंगा । इस प्रकार हमेशा मृगतृष्णा के समान समीप में सुख देखता हुआ अपनी सारी आयु बिताता है और अन्त में अत्यन्त घोर दुःख के अंधेरे में पड कर यमराज का अतिथि बन जाता है ॥ २० ॥

क्वचित्सुखं क्षणमथ दुःखसंगमः
क्वचित्पुनर्हसनमथातिरोदनम् ।
क्वचिद्धनागमनमथो दरिद्रता
क्व विश्वसिम्यनियतभाववस्तुनि ॥ २१ ॥

कहीं एक क्षण के लिये सुख हो रहा है तो दूसरे ही क्षण में दुःख आ घेरता है। कहीं पर क्षण भर के लिये हँसी और बाद में रोदन हो रहा है। कहीं धन आता हुआ नजर आता है। किन्तु क्षण में ही दरिद्रता आक्रमण कर लेती है। अनियतरूप से दिखाई देनेवाली इन वस्तुओं में कहां विश्वास किया जाय ॥ २१ ॥

जन्मफलदशकम्।

**आतुरोऽहमधिगर्भमागुरं कर्तुमीशभजनं जनेः परम् ।**
**जन्मनश्च परतोऽभज सुखं संसृतेः क्षणिकमेव केवलम् ॥ २२ ॥**

यहां से दस श्लोकों में गर्भोपनिषद के आधार पर कर्त्तव्यनिदर्शन कराते हुए रागहेतुक कर्तव्यच्युति को दरशाते हैं और रागको हेय बतलाते हैं।

मैं ने गर्भावस्था में दुःखी होकर यह प्रतिज्ञा की थी कि जन्म के बाद मैं भगवान् का ही भजन करूंगा। किन्तु जन्म लेने के बाद मैं ने संसार के क्षणिक सुखों का ही सेवन किया। "**यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम्** (गर्भो. ४) यह गर्भोपनिषद का मन्त्र है। मैं यदि इस योनि से मुक्त हो जाऊंगा तो उस भगवान् महेश्वर शंकर की शरण में रहूंगा जो अशुभ का क्षय करनेवाला है और फल – परमपुरुषार्थ मुक्ति को देनेवाला है यह मन्त्रार्थ है।

दूसरा अर्थः– मैं ने जन्म के बाद कई बार ऐसी प्रतिज्ञायें कीं कि मैं गर्भ में अत्यन्त आतुर रहा हूं अब इस कुम्भी नरक से बचने के लिये ईश्वर का भजन करूंगा। किन्तु प्रतिज्ञा के बाद भी "**बलादिव नियोजितः**" इस न्याय के अनुसार संसारसुख में ही फंसा रहा ॥ २२ ॥

गर्भदुःखदलितोऽभ्युपागमं सांख्ययोगमधिगन्तुमुत्तमम् ।
अध्यगीषि पुनरौज्ज्वलान्युप - न्यासनाटकमुखान्यपाश्रवः ॥२३॥

गर्भदुःख से दलित होकर मैं ने यह प्रतिज्ञा की थी कि इस दुःख से छुडानेवाले उत्तम सांख्यशास्त्र का मैं श्रवणमननादि करूंगा। किन्तु इसके बाद मैं ने शृंगारिक नाटक उपन्न्यास आदि को ही पढता हुआ अपनी प्रतिज्ञा से दूर रहा। "यदि योन्यां प्रमुञ्चामि सांख्यं योगं वा समाश्रये। अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम्" यह गर्भोपनिषद का मन्त्र है॥ २३ ॥

आगतो मनुजजन्मना सना—दात्मतत्त्वममलं परीक्षितुम् ।
आगतश्च निपुणं समावहं रत्नकाञ्चनधरापरीक्षणम् ॥ २४ ॥

मैं मनुष्य जन्म के द्वारा नित्यशुद्ध आत्मतत्त्व की परीक्षा करने आया था। अर्थात् नित्यानित्यवस्तुविवेक के द्वारा आत्मतत्त्व की उपादेयता निश्चित करने आया था। और आनेके बाद बडी कुशलता के साथ रत्न, सोना और जमीन आदि का परीक्षण किया - कौन चीज अच्छी है, कौन रत्न उत्तम है यही सब निश्चित किया ॥ २४ ॥

आगतो भुवनयोनिमीश्वरं द्रष्टुमेव मनुजन्मजन्मना ।
आगतश्च नटनाट्यचित्रकं दृष्टवान् पटु नटीकटाक्षितम् ॥ २५ ॥

"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति...तद्विजिज्ञासस्व" "आत्मा वा अरे द्रष्टव्यः" इत्यादि श्रुति के अनुसार समस्त भुवन के कारण परमेश्वर को देखने ही के लिये मनुष्य जन्म लेकर आया। और आकर नटों का कुत्सित नाट्यचित्र तथा नटियों का चतुर कटाक्षों को ही देखा ॥ १५ ॥

आगतोऽगणितजन्मसंचितान् धावितुं कलुषसंचयानिह ।
आगतश्च समपादयं मनः कोटिवासनमपारकल्मषम् ॥ २६ ॥

"नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया......यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् । एकाकी तेन दह्यामि...... यदि योन्यां प्रमुञ्चामि तं प्रपद्ये नारायणं देवम् अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम्" इत्यादि गर्भोपनिषत् प्रभृति के मन्त्रों के अनुसार अगणित - अनन्त जन्म संचित पापसमूह को धोने के लिये ही इस मर्त्य लोक में मैं आया था और आकर अपने मन को करोडों वासनाओं और अपार कल्मष - पापों से भर दिया ॥ २६ ॥

आगतः सकललोकनायकं सेवितुं कलितपुण्यशेमुषिः ।
आगतश्च सततैकचिन्तया पञ्चबाणविशिखानसेविषि ॥ २७ ॥

सत् - असत् विवेक करने योग्य उत्तम बुद्धि लेकर परमेश्वर की सेवा करने आया था । "यदि योन्यां प्रमुञ्चामि तं प्रपद्ये भगवन्तं नारायणं देवम्" यही मेरी प्रतिज्ञा थी । और आकर निरन्तर एक ध्यान से कामदेव के शरों का ही सेवन किया अर्थात् कामदेव के बाणों से आहत होकर उस कामदेव का ही निरन्तर चिन्तन करता रहा ॥ २७ ॥

आगतो भुवि समाहितं मनः संविधातुमखिलान्तरात्मनि ।
आगतश्च समदः समादधां पुत्रदारविभवाद्यनात्मनि ॥ २८ ॥

अन्तरात्मा में मन को समाहित करने के लिये इस मर्त्य लोक में आया । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति" "यदि योन्यां प्रमुञ्चामि ध्याये ब्रह्म सनातनम्" इत्यादि श्रुति भी इस अर्थ को बता रही है । और आकर मदोन्मत्त होकर पुत्र, दार और धन इत्यादि अनात्मवस्तुओं में ही मन को समाहित किया ( लगाया ) ॥ २८ ॥

आगतोऽखिलजनेषु निर्मलं शर्मदं च समभावमीक्षितुम् ।
आगतश्च कृतवान् निजः परः क्षुल्लको लघुरितीदृशीं दृशम् ॥ २९ ॥

" समं पश्यन् हि सर्वत्र " " योगस्थः कुरु कर्माणि " " समत्वं योग उच्यते " इत्यादि वचनानुसार समस्त प्राणियों में समदृष्टि रखने के लिये आया । और आकर यह मेरा यह पराया यह तुच्छ यह हल्का ऐसी विषम दृष्टि ही रखी ॥ २९ ॥

आगतो भुवि परोपकारमा – धातुमेव कलयन् कलेवरम् ।
आगतश्च धनसंचयाशया हन्त हन्त परवञ्चनं व्यधाम् ॥ ३० ॥

मानव शरीर लेकर इस धरातल में परोपकार करने आया । " परोपकाराय सतां विभूतयः " इत्यादि नीतिवचन यही अर्थ बतला रहा है । और आकर धनसंचय करने की इच्छा से हाय ! हाय ! मैंने परवञ्चन ही किया ॥ ३० ॥

आगतः सुकृतमञ्चितुं पर– ब्रह्मभावगमनादिकारणम् ।
आगतश्च शतकोटिजन्मनां बीजमेव वृजिनं समार्जयम् ॥ ३१ ॥

" तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा " " ब्रह्मविद् ब्रह्मैव भवति " इत्यादि श्रुतियों के अनुसार ब्रह्मभाव प्राप्ति हेतु ब्रह्मज्ञान का आदिकारण यज्ञदानादि सुकृत कर्म जनित पुण्य को प्राप्त करने के लिये आया और आकर करोडों जन्मों का कारण पाप का ही अर्जन ( सम्पादन ) किया ॥ ३१ ॥

भोगदुःखताष्टकम् ।

भोगेष्वलब्धेषु तृषाऽतिदुःखमल्पेषु लब्धेष्वनलंत्वबुद्धेः ।
प्रकामभुक्तेषु च रोगदुःखं तदुच्यतां चेत्सुखमेषु किंचित् ॥ ३२ ॥

यहां से आठ श्लोकों में भोगों की दुःखरूपता एवं हेयता दिखलाते हैं ।

भोग प्राप्त न होनेसे तृष्णा के कारण दुःख, थोडा प्राप्त होने पर तृप्ति न होनेके कारण दुःख और यथेष्ट भोगों को भोगने से रोग के कारण दुःख, इस प्रकार सब तरह से दुःख ही दुःख दीख रहा है तो बतावो कि इन भोगों में कुछ सुख भी संभव है ? ॥ ३२ ॥

संभुज्यमानेषु विनाशहेतोर्भयोद्भवं द्वेषसमुद्भवं च ।
तदीयसंस्कारवशाद् विवृद्ध– रागोद्भवं लोभसमुद्भवं च ॥ ३३ ॥

संभाव्यमानप्रतिबन्धकेषु विद्वेषमात्सर्यभयादिहेतोः ।
उपेष्यमाणेष्वपि तेषु चेति दुःखं हि सर्वत्र विलोकयामः ॥ ३४ ॥

इतना ही नहीं, जब भोगों को भोगते हैं तब भी उन भोगों के विनाशक के प्रति भय या द्वेष के कारण दुःख होता है एवं उन भोगों के संस्कार के कारण उत्तरोत्तर बढते हुए राग वा लोभ से भी दुःख होता है ॥ ३३ ॥

और आगे प्राप्त होने योग्य भोगों में, संभाव्यमान प्रतिबन्धकों के साथ विद्वेष, मात्सर्य अथवा उनसे भय के कारण दुःख होता है । इस प्रकार हम सभी जगह दुःख ही दुःख देख रहे हैं । भगवान् पतञ्जलि ऋषि योगसूत्र में भी कहते हैं– **परिणामतापसंस्कार-दुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः** ॥ ३४ ॥

पल्यङ्कसौधचपलाव्यजनादि तुल्य-
मिभ्यस्य हालिककुटीरजरत्कटानाम् ।
संसेव्यमानमधिकाय न तत् सुखाय
कष्टाय किन्तु परतस्तदलभ्यमानम् ॥ ३५ ॥

महल, पलंग और बिजली का पंखा इत्यादि वस्तु धनियों के लिये उतना ही सुखप्रद है जितना कि हल चलानेवालों के लिये

छोटी झोंपडी और फटी चटाई आदि सुखप्रद है। ये महल आदि प्राप्त होनेसे अधिक सुख होता हो ऐसी बात नहीं है। हां इतनी बात अवश्य है कि एक बार प्राप्त करके उसका उपभोग करने के बाद, फिर समय पर नहीं मिलता है तो महान क्लेश का कारण होता है॥ ३५॥

अत्येष्यति ध्रुवमपारसुखक्षणोऽयं
दुःखक्षणश्च समुपेष्यति नो विवादः।
दुःखे महत्युपनते किमयं सहायो
मोदक्षणो ननु भविष्यति कस्यचिद्वा॥ ३६॥

यह निश्चित है कि यह अपार सुख की घडी बीत जायेगी और दुःख की घडी भी अवश्य आयेगी इस में कोई विवाद नहीं हो सकता। किन्तु प्रश्न यह है कि महान दुःख जब उपस्थित होता है तब यह आनन्द की घडी, जो बीत गयी है, सहायक बनेगी ?। तात्पर्य यह है कि जब दुःख आता है तब जितना भी भोगा गया सुख है, वह सब व्यर्थ पड जाता है। उस सुख का होना न होना बराबर हो जाता है। दुःखी पुरुष को पूर्वानुभूतसुख निरर्थक सा लग जाता है॥ ३६॥

चिरं भुक्त्वा भोगान् युवतिवसुयोगान् किमधुना
गलद्बाष्पाऽऽसारो भवसि रुजयाऽऽरोदनपरः।
इति श्रुत्वाऽऽचष्टाऽविदितपरकष्टाऽकरुण मां
गतं भोगाभासं ज्ञपयसि वृथा संव्यथयितुम्॥ ३७॥

पूर्वश्लोक में यह बताया गया कि दुःख की घडी आने पर पूर्वभुक्त समस्त भोग निरर्थक सा हो जाता है। इतना ही नहीं, वह विपरीत दुःख का भी कारण होता है इस बात को यहां पर बतलाते हैं।

आनन्द से सारी जिंदगी बिता कर अन्त में रोगी बने एक आदमी के प्रति एक विवेकी प्रश्न करता है– हे मित्र! तुमने बहुत कालतक कामिनीकाञ्चनयुक्त अनेक भोगोंको भोगा अब तुम्हें थोडा सा रोग हुआ तो उसके लिये आंसू बहाते हुए क्यों रोते हो?। यह सुन कर वह कहता है– अरे पराये दुःख को न जाननेवाले निर्दयी! तुम व्यर्थ में बीते हुए सुखाभास की याद दिला कर इस अन्तिम अवस्था में मुझे क्यों व्यथित कर रहे हो।

तात्पर्य यह है कि भोगों को भोगते हुए लोग अपने को महा भाग्यशाली समझते हैं। परन्तु वे महान् भूलमें हैं। दुःख आने पर इन्हीं भोगों का स्मरण करते करते हाय हाय करते हुए उन्हें अधिक दुःखी होना पडेगा॥ ३७॥

नष्टं सुखादि हृदि दुःखकरं चिराय
स्वप्नायितं भवति कालगते तदेव।
इत्थं कुतः स्फुटतरं परिलक्ष्यमाणं
न स्वप्नतुल्यमधुनैव निभालयध्वे॥ ३८॥

जो पति पुत्र सुख इत्यादि नष्ट होते हैं वे बहुत दिन तक हृदय में दुःख पहुँचाते हैं और वे ही बहुत समय बीतने पर स्वप्न समान हो जाते हैं। इस प्रकार स्पष्ट ही देखते हैं तो वर्त्तमानकाल में ही उन पति पुत्र सुखादि को स्वप्न तुल्य क्यों नहीं देख लेते॥ ३८॥

आयुः समर्प्य सकलं शतकोटियत्नैः
संपादितं वसुचयं महतीं च कीर्त्तिम्।
हर्म्याणि मञ्जुमधुराणि सुहृत्तमांश्च
कालो वियोजयति पश्य बलात् क्षणेन॥ ३९॥

संपूर्ण जीवन को ही लगा कर करोडों यत्नों के द्वारा संपादन

किया गया धन, कीर्ति, मनोहर महल और मित्र वर्ग आदि सबको वह काल एक क्षण में वियुक्त कर देता है। मरने के बाद कोई भी वस्तु अपनी नहीं रहती ॥ ३९ ॥

धनदशकम् ।

विनिर्याते यस्मिन् भवति परिपन्थी जनयिता
तथाऽमित्रो मित्रं भवति निजजायाऽपरिचिता ।
उपेते सस्वत्वा पितृमुखपदैः सार्थकगिरो
यतस्तस्मात् प्राहुः स्वमपि धनमेवार्थमपि च ॥ ४० ॥

यहां से दस श्लोकों में धन से तृष्णा को हटाने योग्य बतलाते हैं।

धन चला जाता है तो पिता शत्रु हो जाता है, मित्र वैरी बन जाता है और अपनी पत्नी अपरिचित हो जाती है। और धन के आने पर स्वत्व अर्थात् अपनापन रखते हुए पिता आदि पिता आदि शब्दों के द्वारा सार्थक शब्दवाले होते हैं इसलिये धन को ही 'स्वं' और 'अर्थ' कहा गया।

यहां पर यह बतला रहे हैं कि धन का नाम 'अर्थ' क्यों पडा। इसलिये कि धन के न रहने पर पिता, मित्र, पत्नी आदि शब्दों का कोई अर्थ नहीं रहता है वास्तव में उनको शत्रु, वैरी, अपरिचित इत्यादि कहना चाहिये। और धन के आने पर पिता पिता बन जाता है; मित्र मित्र रहता है; पत्नी पत्नी होती है। इसलिये शब्दों का यथार्थ अर्थ तो धन ही है इसलिये धनको ही 'अर्थ' कहा। इसी प्रकार धन का नाम 'स्व' भी है। 'स्व' का अर्थ है अपना। धन है तो सब अपने हैं और नहीं तो कोई अपना नहीं है। इसलिये 'अपना' तो धन को ही कहना उचित है ॥ ४० ॥

पतिः पत्नीं हन्यात् पतिमपि च पत्नी हतमतिः
पिता पुत्रं पुत्रः पितरमपि चापत्रपतया।
निषिद्धं संदध्युः श्रुतिशतविरुद्धं च मनुजाः
यदर्थं तं ह्यर्थं भुवि विदुरनर्थं मुनिवराः ॥ ४१ ॥

जिसके लिये पति पत्नी को भी कदाचित् मार डालता है, बुद्धि मारी जाने से कभी पत्नी पति की भी हत्या कर डालती है; पिता पुत्र को और पुत्र पिता को भी निर्लज्जता से मार देते हैं; निषिद्ध एवं श्रुतिविरुद्ध कार्यों को भी मनुष्य कर डालते हैं उस अर्थ को मुनिजन तो अनर्थ ही समझते हैं ॥ ४१ ॥

गुरोराज्ञां दध्मः शिरसि वसुनोऽन्यत्र विषये
पिता नः संसेव्यो ध्रुवमसति चार्थव्ययभये।
अनन्यं सौहार्दं सुहृदि स धनार्थी मम न चेद्
गुरुत्वाद्यं यस्माद् विभवविषयेऽलीकमखिलम् ॥ ४२ ॥

गुरुजी की आज्ञा शिरोधार्य है यदि धन को छोड कर अन्य किसी विषय की हो; पिताजी तो निश्चित ही हमारे सेवनीय है यदि अर्थव्यय का भय न हो; मित्र में मेरी अनन्य अटूट मैत्री है यदि वह धन न चाहता हो। क्यों कि धन की बात आ जाती है तो गुरुत्व, पितृत्व, मित्रता ये सब मिथ्या हो जाते हैं- असत् हो जाते हैं ॥ ४२ ॥

ईषन्न्यूनमिति ह्यवागमि यदा स्वल्पं ममासीद् धनं
यत्नेनोपचितं च हर्म्यविरहान्न्यूनं प्रतीतं पुनः।
हर्म्यादौ वितते च यानविरहादन्यान्यशून्यत्वतो
मायाजालमिदं धनं हि हनुमल्लाङ्गूलचैलायितम् ॥ ४३ ॥

